# संस्कृत-वार्ताः

**दिनाङ्कः 12-12-2020**

**प्रातः** - 06: 55

**मुख्य-वार्ताः**

- प्रधानमन्त्री नरेन्द्रमोदी अद्य एकादशवादने फिक्कीसमूहस्य त्रिनवतितमे वार्षिक-सम्मेलने उद्घाटनसत्रं सम्बोधयिष्यति।
- प्रधानमंत्री श्री नरेन्द्रमोदी उज़्बेकिस्तानदेशस्य राष्ट्राध्यक्षेण सह प्रथमे उच्चस्तरीय आभासी उपवेशने ह्य: विस्तृत-चर्चां व्यदधात्।
- ह्य: श्रीमोदी दृश्यश्रव्यप्रणाल्या अन्ताराष्ट्रियं भारतीमहोत्सवं समबोधयत्। श्रीमोदिना प्रोक्तं यत् पञ्चदश कोटिभि: महिलाभि: मुद्राऋणस्य लाभ: सम्प्राप्तोऽस्ति।
- पेरिस-जलवायु-सन्धे: पञ्चमवार्षिक्या: अवसरे अद्य प्रधानमन्त्री श्रीनरेन्द्रमोदी वैश्विक-जलवायु-शिखर-सम्मेलनं सम्बोधयिष्यति।

**अपिच**

- कोरोनामहामार्याः विरुध्ये युद्धे भारतेन प्रशंसार्हाः सफलता अधिगता। स्वस्थताप्रतिशतता संवर्ध्य पंचनवति दशमलव द्वि-त्रिपरिमिता जाता।

**कोविड ओपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युध्यति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

**मुखावरंक सन्धारयन्तु**

**सामाजिकदौर्यं परिपालयन्तु,**

**पाणिपादं च यथासमयं प्रक्षालयन्तु।**

**पीएम-फिक्की**

प्रधानमन्त्री नरेन्द्रमोदी अद्य एकादशवादने फिक्कीसमूहस्य त्रिनवतितमे वार्षिक-सम्मेलने उद्घाटनसत्रं सम्बोधयिष्यति। प्रधानमन्त्रिणा प्रोक्तमस्ति यत् स: भारतीय-अर्थव्यवस्थाया: प्रसृतक्षेत्राणां विषये चर्चां विधास्यति। त्रिदिवसात्मकस्य दृश्यश्रव्यप्रणाल्यात्मकस्य सम्मेलनस्य अस्मिन् वर्षे ध्येयवाक्यं वर्तते 'प्रेरितं भारतम्' इति।

**मोदी उज़्बकिस्तान-भारत**

प्रधानमंत्री श्री नरेन्द्रमोदी उज़्बेकिस्तानदेशस्य राष्ट्राध्यक्षेण शौकत-मिर्जियोयेव-वर्येण सह प्रथमे उच्चस्तरीय आभासी उपवेशने ह्य: कोरोणामहामारी सन्दर्भे उभयोः देशयोः द्विपक्षीय पारस्परिक पक्षाणां वर्धने बलं दत्तवान्। अस्मिन् प्रसंगे श्री मोदी अवादीत् यत् उग्रवाद-भिन्नतावादादि विषयेषु आवयोः चिन्ताः समानाः सन्ति। आवां आतंकवादं विरुद्ध्य दृढ़तया सहैव स्थितौ स्वः। क्षेत्रीय सुरक्षायाः विषयेऽपि आवां सममेव दृष्टिकोणं स्थापयावः। अत्रावसरे असौ न्यगादीत् यत् उभौ देशौ अफगानिस्तान-देशेऽपि शान्तिप्रक्रियाया: समर्थकौ स्तः।

**भारती महोत्सव**

ह्य: श्रीमोदी दृश्यश्रव्य प्रणाल्या चेन्नई-वानविल-संस्कृतिकेन्द्रद्वारा समायोजितं अन्ताराष्ट्रियं भारतीमहोत्सवं समबोधयत्। श्रीमोदिना प्रोक्तं यत् पञ्चदश कोटिभि: महिलाभि: मुद्राऋणस्य लाभ: सम्प्राप्तोऽस्ति। श्रीमोदिना पुनरेकवारं प्रोक्तं यत् केन्द्रसर्वकार: सनिर्धिनं प्रत्येकं नागरिकस्य सशक्तिकरणाय प्रयासरतो वर्तते।

श्री नरेन्द्रमोदीः तमिलभाषायाः जनकविः श्री सुब्रह्मण्यम् भारतीपादानां सम्माने समायोजितम् प्रथमं अन्ताराष्ट्रियभारतीमहोत्सवं संबोधितवान्। श्रीमोदीः उक्तवान् यत्-श्रीभारतीः एकांगी प्रतिभापूरितः कविरेव नासीत् अपितु सः कविः, लेखकः, सम्पादकः, पत्रकारः, सामाजिक परिवर्तनकारी, स्वतन्त्रतासेनानी अपि च इत्योत्यधिक मेवासीत्।

**प्रकाश-जावडकेरः**

पेरिस-जलवायु-सन्धे: पञ्चमवार्षिक्या: अवसरे अद्य प्रधानमन्त्री श्रीनरेन्द्रमोदी वैश्विक-जलवायु-शिखर-सम्मेलनं सम्बोधयिष्यति। पेरिससन्धि: जलवायु-परिवर्तन-नियंत्रण-प्रक्रियायां मुख्यं स्थानं भजते।

पर्यावरणमन्त्रिणा प्रकाश-जावडेकर-महोदयेन प्रोक्तं यत् जलवायु परिवर्तनं अकस्मात् जायमानं परिवर्तनं नास्ति, एतत्तु विगतशताब्द्यारभ्य पर्यावरणस्योपरि पतितानां दुष्प्रभावानां परिणामो विद्यते। अमुना इदं वक्तव्यं पेरिससन्धेः पञ्चवर्षपूर्त्यावसरे नवदेहल्यां उक्तम्। अत्रावसरे इदमपि उदीरितं यत्- भारतं जलवायुपरिवर्तनं सम्बद्धसंकटं समाहर्तुं दृढ़तया प्रतिबद्धतां प्रदर्शयति। अत्रैव इदमपि प्रोक्तं यत् भारतं पेरिससन्धेः नियमान् अक्षरशः परिपालयति।

**तोमरः**

सर्वकारः प्रावोचत् यत् परिष्कृतं कृषिविधेयकं कृषकाणां हितं ध्वात्वा पारितम् अस्ति। नवदिल्याम् ह्य: वार्ताहरान् समबोधयत् कृषिमन्त्री नरेन्द्रसिंह तोमरः न्यगादीत् यत् कृषकाः न हि केवलं खाद्यान्न-आपणे एव प्रत्युत कुत्रचिदपि नैजम् उत्पादं निजनिर्धारितमूल्ये

विक्रेतुं समर्थाः सन्तु। इति निधाय कृषिविधेयकं संशोधनं विहितमासीत्। प्रशासनं अब्रवीत् यत् संशोधितं विधेयकमवलम्ब्य कृषकैः समं सविस्तरं परिचर्चार्थं वयं तत्परा स्मः। सममेव श्रीतोमरः एतदपि प्रत्यपादयत् यत् केन्द्रं कृषकान् यथासम्भवं परामृशति यत् नूतन-विधेयकेन न्यूनतम-समर्थन-मूल्ये न कश्चित् दुष्प्रभावो भविष्यति। अत्र सन्दर्भे विचार-विनिमयं विधातुं प्रशासनेन कृषकसंगठनेभ्यः प्रस्तावः प्रेषितः आसीत्, किंच कृषकप्रतिनिधिभिः प्रस्तावोयं निराकृतः। सर्वकारः सम्बद्धैः कृषकैः सह प्रसन्नमनसा विचार-विनिमयाय तत्परः अस्ति।

**कोविड**

कोरोनामहामार्याः विरुध्ये युद्धे भारतेन प्रशंसार्हाः सफलता अधिगता। संक्रमितजनानां संख्या न्यूनीभूय त्रि-दशमलव सप्त-एक प्रतिशन्मिता संजाता रुग्णानाम् संख्या प्रतिदिनम् न्यूनायते। देशे कोरोणापरीक्षणमानं पंचकोटितोप्यधिकम् जातम्। स्वस्थताप्रतिशतता संवर्ध्य पंचनवति दशमलव द्वि-त्रिपरिमिता जाता। विगते अहोरात्रे भूयोपि एकोनत्रिंशत्सहस्राणि महामार्या: नूतनानि प्रकरणानि पुष्टिंगतानि। तत्रैव पंचशतोत्तर सप्तत्रिंशत्सहस्रमिताः जनाः स्वस्थताम् गताः। देशे रुग्णानां संख्यापेक्ष्या स्वस्थीभूतानां संख्या पंचविंशतिगुणिता अधिका अवर्तत। विगते अहोरात्रे हिमाचलप्रदेशे विंशति अनया महामार्या: कालकवलिता:।

**यूएन-चीफकोविड्**

संयुक्तराष्ट्रसचिव: एन्टोनियो गतरेज प्रावोचत् यत् कोरोना वैश्विक महामारी अस्मान् ऐक्यभावनां वैश्विक-सहयोग-भावनां च अशिक्षयत्।

**।। इति वार्ताः ।।**